सर्वदुःखनिवृत्तिहेतुभूतकर्मज्ञानानुष्ठानाश्रयतयाऽश्रमशब्दार्थस्यापि व्युत्पत्तिवललभ्यत्वेन वर्णव्यवस्थावदाश्रमव्यवस्थाऽप्यनादिरित्यनुमीयते। सर्वदुःखनाशो हि सर्वजन्तूनां लक्ष्यः। स च सहसाऽनादिकालसञ्चितवासनानां निःशेषतः प्रविलयं विना न सम्भवः किन्तु क्रमश इत्याश्रमचातुर्विध्यमपि संघटते। एवं सति प्रथमाश्रमे गुप्तेन्द्रियस्य संयमं विधाय गुरुशुश्रूषादिना स्वाध्यायमधीत्य, द्वितीयेऽग्निहोत्रादीनि कर्माण्यनुष्ठाय, तृतीये तपसा पूर्णचित्तशुद्धिमवाप्य, तुरीये ज्ञानप्राप्तौ कृतकृत्यता स्यात्। ते चाश्रमा न सर्वेषां समानाः। " एष वोऽभिहितो धर्मो ब्राह्मणस्य चतुर्विधः " (मनुः), " चत्वार आश्रमा ब्राह्मणस्य त्रयो राजन्यस्य ", इत्यादिन्यायेन ब्रह्मचर्यादय श्चत्वार आश्रमा ब्राह्मणस्य, वानप्रस्थान्ताः क्षत्रियस्य, वैश्यस्य गार्हस्थ्यब्रह्मचर्यौ द्वौ, शूद्रस्य तु गार्हस्थ्य एव। आश्रमादश्रमान्तरं गत्वा निश्रेयससिद्धिरिति सामान्यनियमः। येषां च प्रतिबन्धकसद्भावेऽत्र ज्ञानं न जातं, तेषां परजन्मनि तन्नाशे प्रथमे द्वितीये वाश्रमे तज्जायत इति विशेषः। वामदेवादयोऽत्रोदाहार्याः। ये च ज्ञानसहभुवो व्यासवसिष्ठादय स्ते न सामान्यनियमान्तर्भूक्ताः। तेषां धर्मदेशनायै संसारेऽस्मिन् प्रादुर्भावात्। एतेनैकाश्रम्यवादमपि ये केचन पण्डितंमन्या मन्यन्ते तेऽपि निरस्ता वेदितव्याः। अन्यथा वेदादिशास्त्रविहित श्चातुरश्रम्यवादो व्यर्थ एव स्यात्। न च ज्ञानप्राप्तौ-आश्रमविकल्पः कुत्राप्यस्ति येनैकाश्रम्यपक्षोऽपि स्वीकार्यो भवेत्। तस्मादनादिकालप्रसिद्धा वर्णा आश्रमा श्च चत्वार इति सिद्धम्। एवं च यः खलु गुरुशुश्रूषणरतः कृतविद्यः प्राग् गार्हस्थ्याश्रमे यमनियमादीनभ्यस्य

पश्चान्मनोऽनुकूलं निर्जनं देशं फलमूलोदकाचितं गत्वा तत्र सुशोभनं मठं विधाय त्रिकालस्नायी शुचि र्भूत्वा प्रत्यहमिष्टदेवं प्रणम्य योगासनमारुह्य समग्रीवाशिरःकायः संयतास्यः सुनिश्चलो यथोक्तं योगमभ्यस्येत् स क्रमशो विवेकज्ञानमवाप्याऽसंप्रज्ञातसमाधौ स्थितः स्वस्वरूपप्रतिष्ठो भवेदिति शम् ।

बहूनां योगशास्त्राणां सर्वोपनिषदां तथा ।
सतां च यत्र तात्पर्यं सोऽर्थः संक्षेपतो मया ।
व्याख्यातो वै यथाशक्ति हिताय प्राणिनां मुदा ।
एतेन प्रीयतां कृष्णो य आत्मा सर्वदेहिनाम् ॥

इति भगवत्पूज्यपादपरमहंसपरिव्राजकाचार्यश्री १०८ दण्डिस्वामिवासुदेवाश्रमशिष्यस्वामिशान्ताश्रमकृतौ योगतत्वसंग्रहस्य चतुर्थपादः समाप्तः



